subjected to a process of upward sublimation by means of a Damaru Jantram. *

(ग) तिर्य्यक्पातनम्।

श्लक्ष्णीकृतमभ्रदलं रसेन्द्रयुक्तं तथारणालेन।
खल्वे दत्वा मृदितम् यावत्तन्नष्टपिष्टतामेति।
कुर्य्यात् तिर्य्यक्पातनपातितसूत्रं क्रमेण दृढवह्निं।
संस्वेद्यः पात्योऽसौ न पतति यावद् दृढश्चाग्नौ॥

(c) Inclined sublimation.

Mica, purified and finely powdered, is to be rubbed with mercuy and kanji in a motar, and made into a lump which is to be placed in a Tirjak Patana Jantram. Heat is to be increased gradually till the whole of the mercury is sublimated through the inclined passage.

## (६) अथ पारदस्य रोधनम् (निरोधः) * (एतदस्य षष्ठः संस्कारः)।

प्रथमो विधिः।

पातैः कदर्थितः सूतः षण्डत्वमधिगच्छति।
तन्मुक्तयेऽस्य क्रियते रोधनम् कथ्यते हि तत्॥
विश्वामित्रकपाले वा काचकूप्यामथापि वा।
सृष्टाम्बुजं** विनिक्षिप्य तत्र तन्मज्जनावधि॥

---

* Vidyadhara Jantram is more convenient.

* कश्चित् भ्रान्तिवशादेतद् बोधनम् कथ्यते।

** सृष्ट्यम्बुजमिति पाठान्तरम्। सृष्टाम्बुजं विनिक्षिप्य इत्यस्य स्थाने "सूते जलं विनिक्षिप्य" इत्येष पाठो द्रष्टव्यो रसेन्द्रसारसंग्रहे।

पूरयेत् त्रिदिनं भूम्यां गजहस्तप्रमाणतः।
अनेन सूतराजोऽयं षण्डभावं विमुञ्चति।

*(6) Rodhanam or confinement of mercury. (i. e., the sixth mercurial operation.)*

Mercury is to be subjected to a process of confinement for removal of the impotency which it has acquired by being sublimated. The process is as follows :—Put the mercury into a glass bottle or a shell of a cocoanut. Put over it as much decoction of bala and riddhi (or, a solution of rock salt, according to another version), as is necessary for the immersion of the mercury. The bottle or the cocoanut shell, as the case may be, is then to be kept buried for 3 days in a hole one yard deep, dug out in the ground. By this way mercury is freed from impotency.

—मतान्तरम्—

द्वितीय विधिः।

सृष्टाम्बुजैर्निरोधेन तदा सुखकरो रसः।
स्वेदनादिवशात्सूतो वीर्य्यं प्राप्नोत्यनुत्तमम्॥

(b) Second process.

Mercury, if confined with the decoction of riddhi and bala (according to another version, if confined

असाधुरेष मन्यते यतो वारिसंयोगाद्‌ रसोऽयं पुनर्वारिजदोषं लभेत। सृष्टाम्बुजं—ऋद्धेर्वलायाश्च क्वाथमिति रसेन्द्रचिन्तामणिभाष्यकार-व्याख्या। केश्चित् सृष्टाम्बुजं विकशितकमलमिति व्याख्यातम्। सृष्टाम्बुजं तरुणस्त्रीरजोमूत्रमित्यपि केश्चिद्‌ व्याख्यातम्। सृष्टयम्बुजं सैन्धवजलम्।

with a solution of rock salt becomes a giver of happiness. It gains in potency by further heating, etc.

—मतान्तरम्—

तृतीयो विधिः ।

कदर्थनेनैव नपुंसकत्वमेवं भवेदस्य रसस्य पश्चात् ।
वीर्य्यप्रकर्षाय च भूर्जपत्रे स्वेद्यो जले सैन्धवचूर्णगर्भे ॥

(c) Third process.

Mercury acquires impotency by being subjected to processes of sublimation. For the purpose of increasing its potency, it is therefore, to be boiled by being confined within bhurja leaves, containing rock salt.

—मतान्तरम्—

(घ) चतुर्थो विधिः ।

अथ सूतं समुद्धृत्य काचकूप्यां विनिक्षिपेत् ।
सम्मर्द्यार्म्लेन संपूर्य्य द्वारमुद्रां प्रदापयेत् ॥
स्थापयेड् डमरुयन्त्रे स्वेदयेद्दिनसप्तकम् ।
स्वांगशीतं समुद्धृत्य पूर्ववत् स्वेदयेत् पुनः ॥

(d) Fourth process.

Mercury is to be rubbed with a sour vegetable juice and put into a bottle, the mouth of which is to be hermetically sealed. The bottle is then to be put inside a Damaru Jantram, in which it is to be boiled for seven days. When completely cooled, it is again to be boiled in the same way.

—मतान्तरम्—

(ङ) पञ्चमो विधिः ।

जलसैन्धवयुक्तस्य रसस्य दिवसत्रयम् ।
स्थितिरास्थापनी कुम्भे याऽसौ रोधनमुच्यते ।

(e) Fifth process.

Mercury is said to undergo 'rodhanam' or confinement, if it is kept for 3 days in a vessel containing water and saindhava salt.

*N. B.* In addition to the foregoing processes, a few others are sometimes resorted to, viz., (1) heating of mercury with a solution of rock salt ; (2) Mercury is to be put into a bottle with the menstrual discharge of a young girl, the closed bottle being kept buried for 3 days in a hole cut in the ground ; (3) Mercury is to be heated in a Damaru Jantram for 3 days with the menstrual discharge of a young girl.

## (७) अथ पारदस्य नियामनम् (एतदस्य सप्तमः संस्कारः) ।

रोधनाल्लब्धवीर्य्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियामनं हि तत् ॥

(7) *Niyamnnam or Restraint of mercury.*

In order to do away with the subtleness of mercury due to its gaining in strength by confinement, it is to undergo heating in one of the prescribed manners. This operation is called, "niyamanam", or "restraint" of mercury.

(क) प्रथमो विधिः ।

सर्पाक्षीचिञ्चिकाबन्ध्याभृङ्गाब्जकनकाम्बुभिः ।
त्रिदिनं मर्दितो सूतो नियमात् स्थिरतां व्रजेत् ॥

First process.

Restraint of mercury consists in rubbing it for three days with the decoction of gandhanakuli, bark of tamarind, bitter karkoti, bhringaraja, lotus, and kanaka dhustura. This causes the stability of mercury.

—मतान्तरम्—

(ख) द्वितीयो विधिः ।

नियम्योऽसौ ततः सम्यक् चपलत्वनिवृत्तये ।
कर्कटीफणिनेत्राभ्यां वृश्चिकाम्बुजमार्कवैः ॥
समं कृत्वारणालेन स्वेदयेच्च दिनत्रयं ॥

(b) Second process.

In order to remove the subtleness of mercury, it is necessary to restrain it by rubbing it with karkoti, gandhanakuli, punarnava, lotus, and bhringaraja, and then boiling it for three days with kanji.

—मतान्तरम्—

(ग) तृतीयो विधिः ।

मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटङ्कणोपेतैः ।
काञ्जिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात् ॥

(c) Third process.

Mercury, if rubbed for 3 days with kanji and the following, and then heated, is restrained, and is

capable of devouring metals :—maricha, earthworm, saindhaba, rajika, sigru, and tankana.

—मतान्तरम्—

(घ) चतुर्थो विधिः ।

स्थूलसैन्धवखोटेन कार्य्यं मूषापुटत्रयम् ।
स्थापयित्वा रसं तत्र नवसारं कलांशिकम् ॥
द्वारं निरुध्य यत्नेन वस्त्रं च वेष्टयेन् मृदा ।
स्थापयेद्‌ भूधरे यन्त्रे वह्निः कार्य्यो दिनत्रयम् ॥

(d) Fourth process.

Three crucibles are to be made out of a thick lump of saindhava (each for use for one day). Mercury, with one sixteenth its weight of nabasara, is to be put inside the crucible, the mouth of which is to be hermetically closed with mud and rags. It is then to be boiled by means of a Bhudhara Jantram for three days (one day in each crucible).

—मतान्तरम्—

(ङ) पञ्चमो विधिः ।

उत्तरापथजः स्थूलो रक्तसैन्धवलोष्ट्रकः ।
तद्‌गर्भे रन्ध्रकं कृत्वा सूतं तत्र विनिक्षिपेत् ॥
ततस्तु चणकक्षारं दत्त्वा चोपरि नैम्बुकम् ।
क्षिप्त्वा तत्र प्रदातव्यं पटुना द्वारमुद्रणम् ।
गर्त्तं कृत्वा ततो भूम्यां क्षिपेत् सैन्धवसम्पुटम् ॥

धूलिमष्टाङ्गुलां दत्त्वा कारीषं दिनसप्तकम् ।
वह्निं प्रज्वाल्य तद् ग्राह्यं क्षालयेत् काञ्जिकेन तु ॥
अयं नियमनो नाम्ना संस्कारो गदितो बुधैः ।
अभावे चणकक्षारादर्पयेन्नरसारकम ॥

Fifth process.

Mercury is to be put inside a hole made in a red saindhava lump. Chanaka kshara is then to be put inside the hole. Next is to be poured some lime juice into it. The hole is then to be tightly closed by means of another piece of red rock salt. The samputam, thus prepared, is to be put in a hole made in the earth, which is to be filled in with dust eight angulis in depth deposited upon the salt samputam. A fire made of cow dung, found dried in the pasturage, is to be kept ablaze for seven days. The mercury is then to be washed off with kanji. Narasaram may be made use of, if chanaka kshara is not available.

(८) अथ पारदस्य दीपनम् । ( एतदस्य अष्टमः संस्कारः ) ।

धातुपाषाणमूलाद्यैः संयुक्तो घटमध्यगः ।
ग्रासार्थं त्रिदिनं स्वेद्या दीपनं तन्मतं बुधैः ॥

(8) *Dipanam or stimulation of mercury, (i. e. the eighth mercurial operation.)*

The process by which mercury is kept inside an earthen vessel and heated with some metals, stones, and vegetables for three days is called Dipanam or

stimulation of mercury. This process makes mercury fit for swallowing metals, etc.

(क) प्रथमो विधिः ।

कासीसं पञ्चलवणं राजिका मरिचानि च ।
भूशिग्रुबीजमेकत्र टङ्कणेन समन्वितम् ॥
आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभिः ।
दीपनं जायते सम्यक् सूतराजस्य नान्यथा ॥
अथवा चित्रकद्रावैः काञ्जिके त्रिदिनं पचेत् ॥

(a) First process.

Kasisa, five different kinds of salts, rajika, maricha, sigru seeds, tangana, kanji, and mercury are to be rubbed together and put into a Dola-Jantram, and heated for three days ; or mercury may be mixed with the juice of chitraka, and boiled with kanji for three days.

—मतान्तरम्—

(ख) द्वितीयो विधिः ।

त्रिक्षारसिन्धुखगभूशिखिशिग्रुराजी
तीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः ।
नेपालताम्रदलशोधितमारणाले
साम्लासवाम्लपुटितं रसदीपनं तत् ॥

*(b) Second process.*

Mercury is to be rubbed together with the three ksharas (alkalis), saindhava, earthworm, chitraka root,

sigru, rajika, sarsapa, amlabetasa, saindhava, maricha, and aranala and to be dried by being placed on Nepal copper plates. This is then to be boiled with kanji or with sour asava.

## (९) अथ पारदस्यानुवासनम् । (एतदस्य नवमः संस्कारः)।

(क) प्रथमो विधिः ।

दीपितं रसराजन्तु जम्बीररससंयुतम् ।
दिनैकं धारयेत् घर्म्मे मृत्पात्रे वा शिलोद्भवे ॥

*(9) Anubasanam or Rehabilitation of mercury (i. e. the ninth mercurial operation).*

*(a) First process.*

Stimulated mercury is re-habilitated by being mixed with lime juice, and exposed to the sun, for one day, in a pot made of earth or stone.

—मतान्तरम्—

(ख) द्वितीयो विधिः ।

स्वेदयेदासवाम्लेन वीर्य्यतेजःप्रवृद्धये ।
यथोपयोगसंस्वेद्यः मूलिकानां रसेषु च ॥
सर्पाक्षी क्षीरिणी बन्ध्या मत्स्याक्षी शङ्खपुष्पिका ।
काकजङ्घा शिखिशिखा ब्रह्मदण्ड्याखुकर्णिका ॥
वर्षाभूः कञ्चुकी दूर्व्वा सैय्यकोत्पलशिम्बिकाः ।
शतावरी वज्रलता वज्रकन्दाग्निकर्णिका ॥

श्वेतार्कशिग्रू धत्तूरमृगदूर्व्वारसाङ्कुशाः ।
रम्भारक्तालुनिर्गुण्डी लज्जालुः सुरदालिका ॥
मण्डुकपर्णी पाताली चित्रकं ग्रीष्मसुन्दरा ।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥
जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः ।
कोशातकी नीरकणा लाङ्गली कटुतुम्बिका ॥
चक्रमर्द्दोऽमृता कन्दः सूर्य्यावर्त्तेषुपुङ्खिका ।
वाराही हस्तिशुण्डी च प्रायेण रसमूलिकाः ॥
रसस्य भावने स्वेदे मूषालेपे च पूजिताः ॥

(*b*) *Second process.*

For the purpose of intensifying the potency of mercury, it is to be boiled with sour asava or with the juice of some or all of the following :—

Gandhanakuli, kshirini, bandhya, hilamochika, sankhapuspi, kakajangha, apamarga, bhargi, akhukarni, punarnava, kanchuki, durba, swetajhinti, utpala, simbi, satabari, asthibhanga, agnikarni, sweta arka, sigru, dhattura, mrigadurba ; (these serve to control mercury), rambha, raktalu, nirgundi, lajjalu, devadali, mandukaparni, patali (nagaballi), chitraka, grismasundara, kaka machi, maharastri, haridra, tilaparni, jati, jayanti, shreedevi, bhukadamba, kusumbha, koshataki, jalapippali, langali, katutumbi, chakramarda, guduchi, shurana, surjabarta, sarapunkha, barahikanda, and hastishundi—all these are what are called rasamulika. These are useful for the purpose of rubbing and

boiling of mercury, as also for making crucibles for mercurial operations.

अथ सर्वदोषहरसंक्षिप्तशोधनविधिः।

कुमारिकाचित्रकरक्तसर्षपकृतैः कषायैर्वृहती-
विमिश्रितैः।
फलत्रिकेणापि विमर्द्दितो रसो दिनत्रयं
सर्व्वमलैर्विमुच्यते॥
कुमार्य्या च निशाचूर्णै दिनं सूतं विमर्द्दयेत्।
एवं कदर्थितः सूतो षण्डो भवति निश्चितम्।
बह्वोषधिकषायेण स्वेदितः स बली भवेत्।
सर्पाक्षी चिञ्चिकाबन्ध्याभृङ्गाब्दैः स्वेदितो बली।
ततः स पावकद्रावैः स्विन्नः स्यादति दीप्तिमान्॥

(अनेन विधिना शोधितसूतस्य स्वेदनाद्यनुवासनान्तकाः संस्काराः निष्प्रयोजनाः)।

*An easy process of absolute purification of mercury.*

Mercury is stript of all sorts of impurities, if rubbed for three days with a decoction of kanya, chitraka, red sarshapa, and brihati, and for 3 days more with the triphala. Mercury is then to be rubbed for one day with kanya and powdered haridra. Mercury thus treated becomes impotent, and is therefore to be boiled with the decoction of sarpakshi, chinchika, bandhya, bhringaraja, and mustaka. Thus it becomes powerful. If it is then boiled with the decoction of chitraka, it becomes very powerful.

(Mercury, thus purified, does not require to undergo all those operations beginning with boiling and ending with rehabilitation).

अथान्यविधः सर्व्वदोषहरः संक्षिप्तः शोधनविधिः।

राजीरसोनमूषायां रसं क्षिप्त्वा विबन्धयेत्।
वस्त्रेण दोलिकायन्त्रे स्वेदयेत् काञ्जिकैस्त्र्यहम्॥
दिनैकं मर्द्दयेत् सूतं कुमारीसम्भवैर्द्रवैः।
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम्॥
काकमाचीरसैस्तद्वद् दिनमेकञ्च मर्दयेत्।
त्रिफलायास्तथा क्वाथै रसो मर्द्दयः प्रयत्नतः॥
ततस्तेभ्यः पृथक् कुर्य्यात् सूतं प्रक्षाल्य काञ्जिकैः।
ततः क्षिप्त्वा रसं खल्वे रसादर्द्धञ्च सैन्धवम्॥
मर्दयेन् निम्बूकरसैर्दिनमेकं निरन्तरम्।
ततो राजी रसोनश्च मुख्यश्च नरसारकः॥
एतै रससमैस्तद्वत् सूतो मर्द्दयस्तुषाम्बुना।
ततः संशोष्य चक्राभं कृत्वा लिप्त्वा च हिङ्गुना॥
द्विस्थालीसंपुटे धृत्वा पूरयेल्लवणेन च।
अधः स्थालीं ततो मुद्रां दद्याद् दृढतरां बुधः॥
विशोष्याग्निं विधायाधो निषिञ्चेदम्बुनोपरि।
ततस्तु कुर्य्यात् तीव्राग्निं तदधः प्रहरत्रयम्॥
एवं निषिच्य यात्यूर्द्ध्वं रसो दोषविवर्ज्जितः।
अथोर्द्ध्वस्थालिकामध्ये लग्नो ग्राह्यो रसोत्तमः॥

### *Another easy process of absolute purification of mercury.*

Mercury, kept inside a crucible made of rye and garlic, is to be boiled in kanji for three days by means of a Dola Jantram. It is to be rubbed for one day each with the following: juice of kanya, decoction of chitraka, juice of kakamachi, and decoction of triphala. The mercury is then to be washed off with kanji, and rubbed for one day incessantly with half its quantity of saindhava, and a sufficient quantity of lime juice. It is then to be rubbed with kanji, rye, garlic, lakucha, and narasara; made into a cake; coated all over with hingu, and then dried. The cake is to be put into a samputam consisting of one earthen vessel and one earthen basin placed upon it, the vessel being filled with salt. The joint is then to be closed very tightly. The apparatus is to be placed upon fire and water is to be put into the basin, as usual. Mercury sublimates and gets itself deposited inside the basin. This mercury is free from all defects and may be used for all purposes.

### (१०) अथ रसस्य ग्रासनम् ( धातुभोजनम् ) ( एतदस्य दशमः संस्कारः )।

अजारयन्नभ्रं च हेमगन्धं
वाञ्छन्ति सूतात् फलमप्युदारम्।
क्षेत्रादनुप्तादपि शस्यजातं
कृषीवलास्ते भिषजश्च मन्दाः॥

तुल्ये तु गन्धके जीर्णे शुद्धाच्छतगुणो रसः ।
द्विगुणे गन्धके जीर्णे सर्व्वकुष्ठहरः परः ॥
त्रिगुणे गन्धके जीर्णे सर्व्वजाड्यविनाशनः ।
तत्र चतुर्गुणे जीर्णे वलीपलितनाशनः ॥
गन्धे पञ्चगुणे जीर्णे नित्यं क्षयहरो भवेत् ।
षड्गुणे गन्धके जीर्णे सर्व्वरोगहरो रसः ॥
अवश्यमित्युवाचेन्द्रं देवः श्रीभैरवः स्वयं ।
गन्धपिष्टिकया तत्र गोलः स्याद् गन्धजारणे ॥ *
यथा स्याज्जारणा वह्नौ तथा स्याद् गुणदो रसः ।
तस्माच्छतगुणो व्योमसत्त्वे जीर्णे तु तत्समे ॥
ताप्यखर्परतालादिसत्त्वे जीर्णे गुणाधिकः ।
हेम्नि जीर्णे सहस्रकगुणसंघप्रदायकः ॥
वज्रादिजीर्णसूतस्य गुणान् वेत्ति शिवः स्वयम् ॥

(10) *The grasanam (or swallowing of metals) of mercury (i. e. the tenth mercurial operation).*

Those physicians who expect good results from mercury without letting it swallow mica, gold, and sulphur, are as bad as farmers who expect crops from a field which has not been sown.

The potency of pure mercury increases hundred times, if it is made to consume an equal quantity of pure sulphur. Mercury can cure all sorts of leprosy,

* जारणाख्ये यन्त्रे वह्निसंयोगाद् गन्धकजारणा प्रसस्ता । यन्त्राध्याये चान्यत्र सविस्तरं वर्णितैषा प्रक्रिया ।

if it is made to consume double its quantity of sulphur ; it cures all sorts of inertness, if it is made to consume three times its weight of sulphur; it cures premature falling of teeth and greyness of hair, if it consumes four times its weight of sulphur ; it cures consumption, if it consumes five times its weight of sulphur ; and it cures all sorts of diseases, if it is made to consume six times its weight of sulphur *

All this was said by Mahadeva himself to Indra, (the king of Svarga). If sulphur is to be consumed by mercury, it is first of all to be brought in contact with mercury. The potency of mercury increases according to the number and quantity of metals and semi-metals it consumes.

Mercury increases in potency by hundred times, if it consumes an equal quantity of mica (purified and reduced to ashes) ; it becomes more efficacious if it is made to consume the essences of makshika (pyrites), kharpara, and haritala ; it acquires a thousand attributes if it is made to consume gold, and Siva alone knows the qualities of mercury which has consumed diamond and other similar gems (such as Vaidurya etc.)

### (क) रसस्य प्रथमो ग्रासनविधिः ।

वज्रकण्टकवज्राङ्गं विद्धमष्टाङ्गुलं मृदा ।
विलिप्य गोविशल्याग्नौ पुटितस्तत्र शोधितः ॥

* For the best process of consuming of sulphur by mercury, see Jarana Jantram under apparata.

अयहं वज्रे विनिक्षिप्तो ग्रासार्थी जायते रसः ।
ग्रसते गन्धहेमादि वज्रसत्त्वादिकं क्षणात् ॥

*(c) The first process of swallowing of metals, etc., by mercury.*

A hole, eight angulis in length, is to be cut in the strong and thorny branch of a bajra tree into which will be put mercury, well covered with mud, and heated for three days by means of fire made of dried cowdung. This mercury becomes capable of swallowing sulphur, gold, essence of diamond, etc., in a very short time.

(ख) रसस्य द्वितीयो ग्रासनविधिः ।

त्रिगुणमेव रसेन्द्रमेकमंशं कनकपयोधरतार-
पङ्कजानां ।
रसगुणबलिभिर्विधाय पिष्टिं रचय निरन्तरम-
म्बुभिः कुमार्य्याः ॥
षड्गुणबलिजीर्णोऽयं रसः पिष्ट्याः समुत्थितः ।
ग्रसति वज्रहेमादि ग्रासार्थी जायते सदा ॥

*(b) Second process of swallowing of metals by mercury.*

Three parts of mercury, and one part each of gold, mica, and silver (all of these properly purified and reduced to ashes), with sulphur six times in weight of mercury, are to be rubbed together with the juice of kanya and made into a cake. The mercury which is

obtained from the cake, and which has consumed six times its weight of sulphur, becomes capable of swallowing diamond, gold, and other metals.

(ग) रसस्य तृतीयो ग्रासनविधिः।

सतुत्थटङ्कणस्वर्जि पटुताम्रे त्र्यहोषितम्।
काञ्जिकं रसगन्धयोर्भावनार्थं नियुज्यते॥
अथवा सविड़ः सूतः काञ्जिके तु निमज्ज्यते।
ग्रसति सूतराजोऽयं वज्रघनलुहादिकम्॥

(*c*) *Third process of swallowing of metals by mercury.*

Mercury and sulphur are to be subjected to bhavana with kanji which has been for 3 days in a copper pot with tuttham, tanganam, and swarji kshara. Mercury may also be immersed with bida in kanji. Mercury thus qualified, is capable of swallowing diamond, mica, and other metals.

(घ) रसस्य चतुर्थो ग्रासविधिः।

शङ्खचूर्णं रविक्षीरैश्चातपे भावयेद्दिनम्।
तद्वज्जम्बीरजैर्द्रावैर्दिनैकं धूमसारकम्॥
सुवर्च्चलमजामूत्रैः क्वाथ्यं यामचतुष्टयम्।
कण्टकारी च संक्वाथ्या दिनैकं नरमूत्रकैः॥
•सर्जिक्षारस्तिन्तिड़ीकं कासीसञ्च शिलाजतु॥
जम्बीरोत्थद्रवैर्भाव्यं पृथग् यामचतुष्टयम्॥

जयपालस्त्वचा हीनो मूलकानां द्रवैर्दिनम् ।
सैन्धवं टङ्कणं गुञ्जा शिग्रुमूलद्रवैर्दिनम् ॥
एतत् सर्व्वं समांशेन मर्द्यं जम्बीरजैर्द्रवैः ।
तद्गोलं रचयेद् यत्नाद्विड़ोऽयं वड़वानलः ॥
ग्रसते मर्द्दितः सूतो ह्यनेन तप्तखल्लके ।
स्वर्णाभ्रादीनि लोहानि यथेष्टानि च जारयेत् ॥

(*a*) *Fourth process of swallowing of metals by mercury.*

(1) Powdered conch shell, (2) soot, (3) subarchala salt, (4) kantakari, (5) sarji kshara, (6) tintidi bark, (7) kasisa, (8) silajatu, (9) jayapala seeds (stript of husks), (10) saindhava salt, (11) tangana, and (12) gunja seeds are to be subjected to bhavana for one day with (1) milk of arka plant, (2) lime juice, (3) goat's urine, (4) man's urine, (5) lime juice, (6) ditto, (7) ditto, (8) ditto, (9) juice of mulaka, (10) juice of sigru roots, (11) ditto, and (12) ditto, respectively.

All of them are then to be put together and rubbed for one day with lime juice and made into a lump. Mercury, rubbed with this mixed substance in a hot mortar, swallows a sufficient quantity of gold, mica, and other metals.

विड़ोऽन्यविधः ।

मूलकार्द्रकवह्नीनां क्षारं गोमूत्रगालितम् ।
वस्त्रपूतं द्रुतं ग्राह्यं गन्धकं तेन भावयेत् ॥
शतवारं खरे घर्म्मे विड़ोऽयं हेमजारणे ॥

Another kind of *bida.*

Gandhaka (sulphur) is to be saturated for a hundred times with a solution made of mulaka, ardraka, and chitraka—all burnt into ashes, then, dissolved in cow's urine, and dried each time by being exposed to the intense heat of the sun. Mercury, rubbed with this gandhaka, is competent to swallow gold, etc. The gandhaka, thus prepared, is called a *bida.*

विड़ोऽन्यविधः ।

गुञ्जासैन्धवयोश्चूर्णं देवदालीदलद्रवैः ।
टंकणं किंशुकरसैर्जम्बीराम्लेन चलिकाम् ॥
मूलकक्षारगोमूत्रप्रसादेन च गन्धकम् ।
स्वर्जिकाभूखगव्योषशिग्रुमूलरसेन च ॥
शतशो भावयेत् सर्व्वं विड़ोऽयं वड़वानलः ॥

Another kind of *bida.*

(1) Powdered gunja seeds and saindhava salt, (2) tankana, (3) Chulika salt, (4) gandhaka, (5) swarji, (6) earthworm and (7) the trikatu are to be subjected to bhavana for a hundred times with (1) the juice of deodali leaves, (2) juice of kinsuka leaves, (3) lemon juice, (4) mulaka burnt into ashes and dissolved in cow's urine, (5) juice of the root of shigru, (6) ditto, and (7) ditto, respectively.

विड़ोऽन्यविधः ।

गन्धकं भावयेद्रौद्रे गवीमूत्रेण सप्तशः ।
दग्धशङ्खं शतं भाव्यं शिग्रुमूलरसेन च ॥

प्रतिवारं सुशोष्यं तत् खरे घर्म्मे प्रयत्नतः।
द्वयमेतत् तथा विषं सैन्धवश्च समांशतः।
एतैर्विमर्द्दितः सूतो ग्रसति सर्व्वधातुकम्॥

Another kind of *bida*.

Gandhaka is to be subjected to bhavana in hot sun with cow's urine for seven times; burnt conch shell is similarly to be subjected to bhavana for a hundred times with the juice of shigru roots—it being well-dried every time in hot sun. These two things combined with bisham (aconite) purified, and saindhava, each equal in quantity, form what is called a *bida*. Mercury, rubbed with these things combined; swallows every metal.

विड़ोऽन्यविधः।

टंकणं भावयेत् शतं किंशुकोत्थद्रवैः शतम्।
वह्निमुखाख्यको सोऽयं विड़स्तु सर्व्वजारणे॥

Another kind of *bida*.

Tankana is to be subjected to bhavana for a hundred times with the juice or decoction of kinsuka and well-dried every time in hot sun. This is what is called "fire-mouthed" bida, and is fit for swallowing every thing.

विड़ोऽन्यविधः।

वास्तुकैरण्डकदली देवदाली पुनर्णवाः।
वासापलाशनिचुलतिलकाश्चनमोक्तकाः॥

सर्व्वाङ्गं खण्डशश्छिन्नं नातिशुष्कं शिलातले।
दग्धं काण्डं तिलानाञ्च पञ्चाङ्गं मूलकस्य च॥
प्लावयेत् मूत्रवर्गेण* जलं तस्मात् परिस्रुतं।
लौहपात्रे पचेद् यन्त्रे हंसपाकाग्निना सुधीः॥
बाष्पाणां बुद्‌बुदानाञ्च बहूनामुद्‌गमो यदा।
तदा काशीससौराष्ट्रीक्षारत्रयकटुत्रयम्॥
गन्धकश्च सितो हिङ्गलवणानि च षट् तथा।
एषां चूर्णं क्षिपेत् यत्नात् लौहकपुटमध्यतः॥
सप्ताहं भूगतः पश्चात् धार्य्यस्तु प्रचुरो विड़ः।
(अत्र सकलक्षारैश्च साम्यं तिलकाण्डानां)। **

Another kind of *bida.*

Bastuka, eranda, kadali, devadali, punarnava, basaka, palasa, nichula (jalabetasa), tila, kanchana, and mokshaka—these are to be cut into pieces and kept upon a stone pot. With these will have to be mixed the burnt tila plant combined with five different factors of a mulaka plant, (*viz.*, its root, stem, flower, seeds, and leaves). All of these drugs will have to

* गोजाविमहिषीणां तु स्त्रीणां मूत्रं प्रशस्यते।
खरोष्ट्रेभनराश्वाणां पुंसां मूत्रं हितं स्मृतम्॥

** खर्परं सिकतापूर्णं कृत्वा तस्योपरि क्षिपेत्।
तुल्यञ्च खर्परं तत्र शनैर्मृद्वग्निना पचेत्।
पञ्चक्षारं तथा मूत्रं लवणञ्च विड़ं ततः।
हंसपाकं समाख्यातं यन्त्रं तद् वार्त्तिकोत्तमैः॥

be saturated with all the urines (*i.e.* urines of elephant, camel, ass, horse, and man—all of these male, and those of goat, ram, cow, buffallow—all of these female), and distilled. This distilled water will have to be kept in an iron pot, placed upon an earthen vessel filled with sand, mild fire being applied below the earthen vessel.

Kashisa, saurastri, jabakshara, swarji kshara, tankanam, trikatu, white gandhaka, hingula, and six salts, —all of these are to be powdered and mixed with the heated water, at a time when a sufficient quantity of vapour and froths will arise. The mixture is then to be covered well by means of two iron pots, the joint being tightly closed. This is then to be kept for seven days, inside the earth, well covered with mud. The liquid, thus prepared, is an excellent bida. (The quantity of the three ksharas should be equal to the burnt tila plant).

विड़ोऽन्यविधः ।

काशीशं सैन्धवं माक्षी सौवीरं व्योषगन्धकम् ।
सौवर्चलं स्वर्जिका च मालती रससंभवम् ।
शिग्रुमूलरसैः सिक्तो विड़ोऽयं सर्व्वजारणः ॥

Another kind of *bida.*

Kasisa, saindhava, makshika, saubira, the trikatu, gandhaka, sauvarchala, sarjika, and juice of malati flowers,—all of these are to be saturated with the juice of the root of sigru and dried. The bida, thus produced, is used in the exhaustion of every metal.

तथान्यविधः ।

गन्धतालकसिन्धूत्थचूलिकाटंकणं तथा ।
चारैर्मूत्रैश्च पाचयेत् तदा ज्वालामुखो विड़ः ॥

Another kind of *bida.*

Sulphur, haritala, saindhava, chulika, and tankanam are to be boiled with *ksharas* and urines. The product is called a Jwalamukha (meaning, fire-mouthed) bida.

विड़वटी ।

खोटकं स्वर्णसंतुल्यं समावर्त्तन्तु कारयेत् ।
माक्षिकं कान्तपाषाणं शिलागन्धं समं समम् ॥
भूनागैर्मर्द्दयेद् यामं वल्लमात्रं वटीकृतम् ।
एषा विड़वटी ख्याता योज्या सर्व्वत्र जारणे ॥

Bidabati.

Equal quantities of makshika, chumbaka, and gandhaka, are to be rubbed together for three hours with earthworm and made into pills, six ratis in weight. These pills, called *bidabatis,* are used in the exhaustion of all sorts of metals. The quantity of the gold meant to be swallowed by mercury should be equal to the bidabati, which is to be rubbed well with the mercury and the gold.

(ङ) रसस्य पञ्चमो ग्रासविधिः ।

चतुःषष्ठ्यंशकं हेमपत्रं मायुरमायुना ।
विलिप्तं तप्तखल्लस्थे रसे दत्तां विमर्द्दयेत् ॥

दिनं जम्बीरतोयेन ग्रासे ग्रासे त्वयं विधिः ।
शनैः संस्वेदयेद् भुर्ज्जे बद्धा सपटुकाञ्जिके ॥
भाण्डके त्रिदिनं सूतं जीर्णस्वर्णं समुद्धरेत् ।
अधिकस्तोलितश्चेत् स्यात् पुनः स्वेद्यः समावधि ।
द्वात्रिंशत् षोड़शाष्टांशक्रमेण वसु जारयेत् ।
रूप्यादिषु च सत्वेषु विधिरेवंविधः स्मृतः ॥
चुल्लिकालवणं गन्धमभात्रे शिखिपित्ततः ॥

(*e*) *Fifth process of swallowing of metals by mercury.*

Mercury is to be rubbed, for one day, in a hot mortar, with one sixty-fourth part of its weight of gold leaves besmeared with the bile of peacock, all these substances being immersed in lemon juice. The same procedure is to be repeated, if it is intended that the mercury would be required to swallow another morsel of gold (*i.e.* gold weighing another one sixty fourth part of the mercury). After the rubbing is over, the mercury is to be covered with bhurja leaves, kept inside a vessel containing kanji, mixed with salt, boiled for three days. It will then be found that mercury has swallowed the gold with which it was rubbed.* If the weight of the mercury is greater than

* Gold leaves are sometimes used in the preparation of Swarnasinduram or Makaradhwaja, etc., but the process how the gold is to be swallowed by the mercury does not appear to be known to the modern chemists who are under a wrong impression that gold cannot be chemically combined with mercury. Instead of making the mercury swallow the gold by one of the processes described here, the modern kavirajas and their followers rub the mercury and

what it was originally, it is again to be boiled until it reverts to its original weight. The quantity of gold to be swallowed by mercury may be increased to one thirty-second part, one sixteenth part, one eighth part, etc. Essences of silver and other metals may also similarly be swallowed by mercury. Chulika salt and gandhaka are to be used only in the absence of peacock's bile.

(च) रसस्य षष्ठो ग्रासविधिः ।

शश्वन्मृदम्बुपात्रस्थः शिवजश्छिद्रसंस्थितः ।
पक्को मूषाजले तस्मिन् रसाष्टांशविड़ावृतः ।
संरुद्धो लोहपत्रयाथ ध्मातो ग्रसति काञ्चनम् ॥

*The eighth process of swallowing of metals by mercury.*

Mercury, with one eighth its weight of bida, is to be put into a crucible, strong and well burnt, and is to be closely covered with some metal leaf. The crucible is then to be placed upon a hole at the bottom of an earthen vessel, which contains water, and is to be heated, placed on fire. The mercury, thus heated, is competent to swallow gold.

(छ) रसस्य सप्तमो ग्रासविधिः ।

कुण्डाम्भसि लोहमये सविड़ं सग्रासमीशजं पात्रे ।
अतिचिपिटलौहपत्र्या पिधाय संलिप्य वह्निना
योज्यम् ॥ इति कच्छपयन्त्रम् ॥

---

the gold leaves with sulphur and the prescribed juices; and thus prepare the compound by means of a Baluka Jantram, failing to have the mercury combined with the gold, which is found separated from the compound. For preparation of Makaradhwaja, etc., see the next mercurial operation.

*The ninth process of swallowing metals, etc., by mercury.*

Mercury with *bida* and the metal, etc., meant to be swallowed by the mercury, are to be kept in a metallic bowl containing water. This bowl is to be closely covered with a very broad iron leaf, the joint being carefully plastered, and put inside a metallic vessel which is to be heated. Thus heated, the mercury swallows the metal, etc., mixed with it. The apparatus is called a Kachhapa Jantram. (See the chapter on Jantram).

(ज) रसस्य अष्टमो ग्रासविधिः।

बीजपूरफलं गृह्य त्वचमुत्सृज्य कारयेत्।
नवसारयुतं सूतं तस्य मध्ये विनिक्षिपेत्॥
स्वेदयेद्दोलिकायन्त्रे चाम्लवर्गे दिनत्रयम्।
भूनागं तुवरी लोध्रं बासाया नैम्बुकं जलम्॥
स्त्रीपुष्पं नरशुक्रं च क्रमेण भावितं रसम्।
ग्रसते सर्वलोहानि युक्तियोगाद्‌ रसेश्वरः।
त्र्यहं सप्तदिनं वाऽथ चतुर्दशैकविंशतिः।
संस्काराः सूतराजस्य श्रेष्ठाः स्युरुत्तरोत्तराः॥

*The eighth process of swallowing of metals, etc., by mercury.*

A part of the skin of a bijapura fruit is to be removed and a hole made into it. Put mercury with navasara into this hole (which is to be closed with that part of the kernel and of the skin which were

removed in making the hole, a piece of cloth being also used to cover the whole fruit, if necessary). The fruit is then to be boiled for three days in all sorts of sour vegetable juice. The mercury is then to be subjected to bhavana for one day each with earth worm, tuvari, lodhra, juice of basaka, lemon juice, menstrual discharge, and semen, respectively. If properly applied, this mercury devours all sorts of metals. Each of the bhavana may be performed for three days, seven days, fourteen days, or twenty one days continuously. The more mercury is subjected to such operations the more does it wax in potency.

(झ) रसस्य नवमो ग्रास विधिः ।

कीटिका तिलिनी नाम नवसारोऽथ सूतकः ।
गृह्यते चूर्ण्यते गाढ़ं सूतको मर्द्यते ततः ॥
अष्टवासरपर्य्यन्तं बुभुक्षा पारदे भवेत् ।
निर्म्मलोऽपि च निर्दोषः कामकारी भवेद्‌ रसः ॥
पश्चाच्च जारणं कुर्य्याद्‌ गन्धादीनां च सूतके ।
रागग्राही भवेन्नूनं राक्षसः सर्व्वभक्षकः ॥
वड़वाग्निरयं साक्षात्‌ पारदोऽप्यतिरिच्यते ॥

*The ninth process of the swallowing of metals etc. by mercury.*

A small worm, named tilini (Bengali, telenga), navasara, and mercury are to be rubbed very well for eight days, causing hunger in mercury. Thus

rubbed, the mercury becomes pure, faultless and giver of all wished for objects. This is then to be used for the purpose of swallowing of sulphur etc. This mercury, which is capable of being coloured, is very powerful, and can swallow every thing like a monster.

(ञ) धातुजारणाया दशमो विधिः ।

समर्पितः सैन्धवखण्डकोटरे विधाय पिष्टिं
सिकताख्ययन्त्रे ।
विशुद्धगन्धादिभिरीषदग्निना समस्तमश्नात्य-
शनीयमीशजः ॥

*The tenth process of swallowing of metals by mercury.*

Mercury, rubbed with pure sulphur etc., and then kept in a cavity made in a piece of saindhava, and heated by a very mild heat by means of a Baluka Jantram, is enabled to eat everything fit for being swallowed.

(ट) एकादशो ग्रासविधिः ।

कालकूटो वत्सनाभः शृङ्गकश्च प्रदीपनः ।
हालाहलो ब्रह्मपुत्रो हारिद्रः शुक्तकस्तथा ।
सौराष्ट्रिकः इति प्रोक्ता विषभेदा अमी नव ॥
अर्कसेहुण्डधुस्तुरलाङ्गलीकरवीरकाः ।
गुञ्जाहिफेणमित्येताः सप्तोपविषजातयः ॥
एतैर्विमर्दितः सूतश्छिन्नपक्षः प्रजायते ।
मुखश्च जायते तस्य धातूंश्च ग्रसते तदा ॥

*The eleventh process of swallowing of metals etc. by mercury.*

There are nine different kinds of poison, viz., Kalakuta, batsanabha, shringaka, pradipana, halahala, brahmaputra, haridra, shuktaka, and saurastrika ;

There are seven different kinds of semi-poison, viz, arka, sehunda, dhustura, langali, karabira, gunja, and ahiphena.

Mercury rubbed with these poisons and semi-poisons, becomes deprived of its wings (*i. e.*, unable to sublimate), and is provided with a mouth. It can then swallow metals.

(ठ) द्वादशो ग्रासविधिः।

अथवा त्रिकटुक्षारौ राजी लवणपञ्चकम्।
रसोनो नरसारश्च शिग्रुश्चैकत्र चूर्णितैः॥
समांशैः पारदादेतैर्जम्बीरस्य रसेन वा।
निम्बुतोयैः काञ्जिकैर्वा सोष्णखल्वे विमर्द्दयेत्॥
अहोरात्रत्रयेण स्याद् रसो धातुचरमुखः।

*The twelfth process of swallowing of metals by mercury.*

Mercury is enabled to swallow metals, if rubbed in a hot mortar for seventy two hours, with lime juice, lemon juice, or kanji, and an equal quantity of the following (powdered and combined) :—trikatu, two ksharas, rye, five salts, rasona, narasara, and shigru.

(ड) त्रयोदशो ग्रासविधिः ।

अथवा विन्दुलीकीटैः रसोमर्द्दयेत्त्रिवासरम् ।
लवणाम्लैः सुखं तस्य जायते धातुघस्मरम् ॥

*The thirteenth process of swallowing of metals by mercury.*

Mercury is provided with a mouth swallowing all sorts of metals, if rubbed for three days with binduli insect, salt, and sour vegetable juice.

(ढ) चतुर्द्दशो ग्रासविधिः ।

सहस्रनिम्बुफलतोयघृष्टो रसो भवेद्द वह्नि
सम प्रभावः ।

*Fourteenth process.*

Mercury rubbed with the juice of a thousand lemon fruits becomes as hungry as fire.

(ण) पञ्चदशो ग्रासविधिः ।

क्षारा मुखकराः सर्वे सर्वे ह्यम्लाः प्रबोधकाः ।

*Fifteenth process.*

Since ksharas create hunger and amlas (sour vegetable juices) create consciousness (removal of swoon) in mercury, it is to be rubbed with all the ksharas, if it is intended to create hunger in mercury.

(त) षोड़शो ग्रासविधिः ।

क्षाराम्ललवणैर्मूत्रैर्विषैरुपविषैस्तथा ।
दिव्यौषधिसमूहेन मर्द्दयेद्द दिवसत्रयम् ॥

पारदस्य कलांशेन भेषजेन प्रमर्द्दयेत ।
अनेन हि प्रकारेण बुभुक्षा जायते रसे ॥

*Sixteenth process.*

Mercury gets hungry, if it is rubbed for three days, with ksharas, amlas (sour juices), salts, urines, poisons, semi-poisons, and divine herbs (sixty four in number). Each of these things should be one sixteenth in weight of mercury.

धातुजारणायाः क्रमः ।

गन्धकं जारयेत् पूर्व्वं रसे कच्छपयन्त्रके ।
पश्चाद् वै जारयेद् व्योमहेम प्रभृति यद् भवेत् ॥
पश्चान् नागादयः सर्व्वे जार्य्यन्ते रत्नसंकराः ।
नागं मृतं च पित्तं च समं वै जारयेद् रसे ॥
पूर्व्वप्रोक्तप्रयोगेण तथा लोहं मृदुश्च वै ।
तथैव च भवेत्ताम्रं मारितं सूक्ष्मतां गतम् ॥
तथा समं मृतं बङ्गमतिसूक्ष्मं च तद्रसे ।
क्रमोऽयं विद्यते सर्व्वजारणासु न संशयः ॥
विना गन्धेन कर्त्तव्या नैव हि धातुजारणा ।
न क्षुधा जायते सूते जरयन्ति न धातवः ॥
तस्माद् गन्धः पुरा जार्य्यः सूतवह्निविवृद्धये ॥

*Order of swallowing of metals by mercury.*

Gandhaka is first of all to be swallowed by mercury by means of the Kachchapa Jantram. Then are

to be swallowed mica, gold etc. Last of all lead and other metals, etc. are to be similarly swallowed. The following metals, reduced to ashes and each equal in quantity to mercury, may be swallowed by mercury in the order of their occurrence :—lead, brass, iron, copper, and zinc. This is the order in which metals, etc. are to be swallowed by mercury. Metals are not to be swallowed by mercury, unless, sulphur is first of all made to be swallowed ; otherwise, no appetite is roused in mercury. Sulphur is therefore to be swallowed, first of all, for the purpose of increasing the appetite of mercury.

गन्धकजारणस्य प्रथमो विधिः ।

कृतच्छिद्रां समादाय मध्ये सत्पालिकां नवीम् ।
रसपोटलिकां कृत्वा सुदृढां तत्र धारयेत् ॥
अष्टादशांशभागेन गन्धकं चूर्णितं भृशम् ।
घृतशोधितमादाय तत्र दत्त्वाथ पालिकाम् ॥
हण्डिकोपरि विन्यस्य ह्यधश्चूर्णं सुवर्च्चिकम् ।
काञ्जिकेन समं दत्त्वा त्रिदिनं स्वेदयेद् रसम् ॥
तृतीयेऽहनि तं गन्धं पश्यसि हि सुजारितम् ।
क्रमशो जारयेदित्थं गन्धकं षड्गुणादिकम् ॥

*Swallowing of sulphur.*

Mercury, with eighteenth part its weight of sulphur, finely powdered and properly purified with ghee (clarified butter), is to be contained in a piece of cloth, securely tied. This bundle is to be placed upon a new

earthen basin having a hole at the centre, the latter being placed upon an earthen vessel containing powdered subarchika mixed with kanji. The vessel is to be subjected to a mild heat for three days, after which the sulphur will be found to have been swallowed.

Thus is to be swallowed gradually sulphur to the extent of six times in weight of the mercnry.

राक्षसेश्वररसः।

समग्रतः कृतं पूर्व्वं गन्धजारणमुत्तमम्।
अथ स्त्रीदुग्धकाञ्जीकलवणेन रसेश्वरम्॥
मर्द्दयेत् तेन तं गाढ़ं निम्बुकद्रवमिश्रितम्।
तेनायं जायते सम्यग् रसोऽयं राक्षसेश्वरः॥

*Mercury, the king of monsters.*

First of all, mercury is to be made to swallow sulpher in the way just described. Then it is to be rubbed steadily with human milk, kanji, and saindhava salt, mixed with lemon juice. Thus rubbed, mercury becomes hungry like the king of monsters.

गन्धकजारणस्य द्वितीयो विधिः।

सामुद्रकं द्विखण्डं स्यात् तिलखण्डस्य मध्यगम्।
कुर्य्यात् कुण्डलिकां प्राज्ञो मृन्मयीं तां द्रढ़ीयसीम्॥
तस्यां च गन्धकं दद्यात् स्थाने स्थाने च चूर्णितम्।
तदधः पारदं दद्याद्द्वितीयं खण्डमूर्द्ध्वगम्॥
कुर्य्याच्च घण्टिकायुक्तं द्वयमेकत्र योजयेत्।
चुल्लिकायां तदा दद्यात् सरसं तं समुन्नतम्॥

संहतं मुद्रितं गाढ़ं काचलिप्तं * महोत्तमम् ।
वह्निसहं वलिं दत्त्वा पश्चाद्धाति सुभक्तितः ॥
गुरु पूजादिकं कुर्य्यात् तथा च रसपूजनम् ।
अधो वह्निर्विधातव्यो मध्ये चोर्द्ध्वे समुद्गतः ॥
गन्धको जार्य्यते शुद्धो यावच्छक्यन्तु सत्वरम् ।
रसस्तं ग्रसते गन्धं शीघ्रमेव न संशयः ॥
अनेन विधिना सूतो गंधकं ग्रसते नवम् ।
क्रमशो जार्य्यत इत्थं गन्धको षड़् गुणादिकः ॥

*Second process.*

Two pieces of sea salt are to be hollowed into two pots, each plastered, first of all, with pasted tila (sesamum) and dried, and then with mud on the outside. Purified and powdered sulphur is to be scattered here and there over the inner surface of one of the salt pots, into which is to be kept mercury, the other pot being placed over the first, and the joint closed tightly with cowdung, mud etc. The whole thing is then to be plastered all over with the mixed substance out of which glass is prepared. * It is then to be placed in such a mild fire as to let the glass substance turn into glass. Fire is then to be placed all over the spheroid. Thus heated, the mercury is enabled to swallow the sulphur in a short time. A fresh quantity of sulphur may similarly be swallowed by the very same mercury.

---

* कचलिप्तमिति पाठान्तरम् ।

* According to another version, it is to be plastered all over with mud mixed with human hair.

गन्धकजारणस्य तृतीयो विधिः ।

जारणायन्त्रयोगेन जारयेद् रसविद् सदा ।
वलिश्चैव तथा धातून् कच्छपसंज्ञकेन वा ॥

*Third process.*

Sulphur and metals are to be caused to be swallowed by mercury by means of the Jarana Jantram or Kachchapa Jantram.

गन्धकजारणस्य चतुर्थोविधिः ।

प्रक्षिप्य तोयं मृत्कुण्डे तस्योपरि शरावकम् ।
सचूर्णं मेखलायुक्तं स्थापयेत्तस्य चान्तरे ॥
रसं क्षिप्त्वा गन्धकस्य रजस्तस्योपरि क्षिपेत् ।
समभागं ततो दद्याच्छरावेण पिधापयेत् ॥
लघीयसीं भस्ममुद्रां ततः कुर्य्याद् भिषग्वरः ।
आरण्योपलकैः सम्यक् चतुर्भिः पुटमाचरेत् ॥
एवं पुनः पुनर्गन्धं दत्त्वा दत्त्वा भिषग्वरः ।
सम्यक् कुर्व्वीत सूतस्य यत्नात् षड्गुणजारणम् ॥

*Fourth process.*

In a vessel containing water an earthen basin is to be placed upon a stand. Mercury is to be kept in this basin, powdered sulphur, equal in quantity to the mercury, being placed upon the mercury. The basin is then to be covered with another earthen basin. The vessel is then to be closed by means of a plaster of ash. It is then to be subjected to putam for four

times by means of cowdung cakes found dried in the pasturage. Mercury is thus gradually to swallow sulphur to the extent of six times its weight.

घनसत्वजारणम् ।

घनरहितबीजजारणासंप्राप्तद्लादिसिद्धि
कृतकृत्याः ।
कृपणाः प्राप्य समुद्रं वराटिकालाभेन सन्तुष्टाः ॥
विनैकमभ्रसत्त्वं नान्योरसपक्षकर्त्तनसमर्थः ।
तेन निरुद्धप्रसरो नियम्यते वध्यते च सुखम् ॥
रक्तं पीतञ्च हेमार्थे कृष्णं हेमशरीरयोः ।
तारकर्म्मणि तच्छुक्लं काञ्चने तु सदा त्यजेत् ॥

*Swallowing of the essence of mica by mercury,*

Those chemists who score partial success in mercurial operations, by making mercury swallow gold and other metals minus mica, are as frugal as those divers who, getting at the bottom of the ocean, are satisfied with cowries only. Nothing but the essence of mica can cut the wings of mercury ; hence mercury, when once controlled by mica, can easily be killed. Red and yellow micas are meant for transforming base metals into gold ; black mica is meant for the same purpose, as well as for the purpose of medicines ; white mica is to be made use of in transforming base metals into silver. This last should be avoided in the preparation of gold.

अभ्रजारणमादौ गर्भद्रुतिजारणञ्च हेम्नोऽन्ते ।
यो जानाति न वादौ वृथैव सोऽर्थक्षयं कुरुते ॥

Mica is first of all to be swallowed by mercury and then is gold to be similarly swallowed ; and last of all, is to be effected what is called garbhadruti or internal liquefaction of mercury. The chemist who does not know this makes a waste of his money.

(११) अथ रसस्य मूर्च्छना ( अस्यैष दशमः संस्कारः ) ।

मर्द्दनादीष्टभेषजैर्नष्टपिष्टत्वकारकम् ।
मूर्च्छनं ज्ञायते प्राज्ञैः सर्व्वदोषविनाशनम् ॥

*(11) Swooning of mercury (i. e. the eleventh mercurial operation).*

Rubbing and other acts performed with prescribed drugs leading to the transformation of mercury into a cake-like substance is what is called 'murchhanam', or swooning of mercury. This operation frees mercury from all sorts of evil properties.

—मतान्तरम्—

व्यभिचारं विना रसः व्याधिं हन्ति यदा शुभः ।
सर्व्वदोषविमुक्तोऽसौ मूर्च्छितो कथितो बुधैः ॥
मूर्च्छनं बहुविधन्तु ज्ञायते रससाधकैः ।
षड्गुणबलिना पाकप्रक्रिया श्रेयसी तथा ॥

(*Another version*)

Mercury is in a state of swoon, when it succeeds in curing diseases without producing any after-effect. The processes of causing swoon of mercury, as known to the expert chemists, are many; of all these, heating with six times its weight of sulphur is the best of all.

(Mercury may be brought to a state of swoon, by any of the following and other processes):—

(क) प्रथमो विधिः ।

गन्धकेन रसं प्राज्ञः सुदृढं मर्द्दयेद् भिषक् ।
कज्ज्वलाभो यदा सूतो विहाय घनचापलम् ॥
दृश्यतेऽसौ तदा ज्ञेयो मूर्च्छितो रसकोविदैः ।
रोगचयमसौ हन्यादनुपानस्य योगतः ॥

(*a*) *First process.*

Mercury, duly purified by the foregoing processes, is to be rubbed steadily with (an equal quantity of purified) sulphur; and in course of this rubbing, it gives up its dense subtleness and assumes a black appearance. (The rubbing is to be made in stone mortar and to be continued till the whole of the mercury is reduced to black dust). It is then said to be in a state of swoon, and is able to cure diseases by being combined with suitable anupanam (accompaniments).

(ख) द्वितीयो विधिः ।

षड् गुणबलिजारणं विनायं
न खलु रुजाहरणक्षमो रसेन्द्रः ।

न जलदकलधौतपाकहीनः
स्पृशति रसायनतामिति प्रसिद्धिः ॥
कुपीकोटरमागतं रसगुणैर्गन्धं तुलायां विभुं
विज्ञाय ज्वलनं क्रमेण सिकतायन्त्रे शनैः पाचयेत् ।
वारंवारमनेन वह्निविधिना गन्धक्षयं साधयेत्
सिन्दुरद्युतितोऽनुभूय भणितः कर्म्मक्रमोऽयं शुभः ॥ ❀

(*b*) *Second process.*

Mercury is not able to cure diseases promptly without consuming six times its weight of sulphur. Neither can it be effective in preventing disease and old age, if it is not combined chemically with mica and gold (both reduced to bhasma or ashes). *

Mercury (properly purified) is to be rubbed with six times its weight of sulphur (purified), and put into a glass bottle or flask, which is to be placed in a Baluka Jantram, and properly heated. The heating is to be continued till the surplus sulphur is burnt out and the compound assumes the appearance of red vermilion (noticeable from outside the flask).

---

* रसमन्तरेण हिङ्गुलगन्धाभ्यामपि सिन्दूरं सम्पाद्यमत्र हिङ्गुल-परिमाणं रसस्य द्विगुणम् । अत्र षड् गुणगन्धकेन सह रसस्य सिन्दूरपाकः कथ्यते । अनेनैव प्रकारेण षड् गुणबलिजारणा न सम्पद्यते ॥

* The general rule is not to use any metal for medicinal purposes without purifying and reducing it to ashes. Mercury may, however, be made use of, after it passes through all the stages up to "swoon". Sulphur may be used after purification.

*N. B.* The compound, thus prepared, is what is called Rasa sindura, prepared with six parts of sulphur. This compound can be used in all sorts of diseases with suitable *anupanam* (accompaniment). The compound, thus prepared, is however to be distinguished from mercury exhausted with six times its weight of sulphur.

(ग) तृतीयो विधिः ।

त्रिगुणमिह रसेन्द्रमेकमंशं कनकपयोधरतार-
पङ्कजानां ।
रसगुणबलिभिर्विधाय पिष्टिं रचय
निरन्तरमम्बुभिः कुमार्य्याः ॥

(*c*) *Third process.*

Three parts of mercury, and one part each of gold, mica and silver (all of these properly purified and reduced to ashes), with sulphur six times in weight of mercury, are to be rubbed together with the juice of kanya and made into a lump, which is to be roasted properly by means of a Baluka Jantram.

(घ) चतुर्थो विधिः ।

सूतप्रमाणं सिकताख्ययन्त्रे
दत्त्वा बलिं मृद्घटितेऽल्पभाण्डे ।
तैलावशेषेऽत्र रसं निदध्यात्
मग्नार्द्धकायं प्रविलोक्य भूयः ॥

आषड्गुणं गन्धकमल्पमल्पं
क्षिपेदसौ जीर्णवलिर्बली स्यात्।
रोगेषु सर्व्वेषु नियोजितोऽय-
मसंशयं हन्ति गदं जवेन॥
नागादिशुल्वादिभिरेषः पिष्टः
रोगेषु सर्व्वेषु प्रयुज्यते हि॥

(*d*) *Fourth process.*

Into a small earthen pot, placed on a Baluka Jantram, put sulphur, equal in quantity to mercury. On the sulphur being reduced to a liquid, put the mercury also into the pot. As soon as the sulphur will be found reduced to half the level of the mercury, put more sulphur into the pot. This is to be done again and again, till the total quantity of sulphur, being six times in weight of the mercury, is consumed. This mercurial compound, which consumes six times its weight of sulphur, becomes very powerful. It is efficacious in all sorts of diseases, and may be used in all sorts of diseases by being mixed with lead, copper etc., (purified and reduced to ashes).

(ङ) पञ्चमो विधिः—सर्वरोगहरी कर्पूरप्रक्रिया।

स्थाल्यां दृढ़घटितायामर्द्धं परिपूर्य्य तुर्य्यलवणांशै-
रक्तेष्टकारजोभिस्तदुपरि सूतस्य तुर्य्यांशम्।
सितसैन्धवं निधाय स्फटिकारिं तत्समञ्च तस्योर्द्ध्वं।
स्फटिकारिधवलसैन्धवशुद्धरसैः कण्याम्बुपरिघृष्टैः

कृत्वा पर्पटमुचितं ॥ तदुपर्य्याधाय तद्वदेव पुन स्फटिकारिसैन्धवरसं दद्यादितः स्खलतो रसस्य लाभाय तदुपरि खर्परखण्डकान् धृत्वा परया दृढ़स्थाल्या-च्छाद्य मुद्रयित्वा दिवसत्रितयं विपचेद्विधिना ॥

( अत्रानुक्तमपि भल्लातकं ददाति वृद्धाः पारदतुल्यम् । )

(*e*) *Fifth process—preparation of a camphor-like compound, which cures all diseases.*

The lower half of a strong earthen pot is to be filled with the following:—powdered saindhava, one fourth in quantity of mercury. Upon that, red brick powder, upon that, white saindhava powder, each one fourth in quantity of mercury; and upon that, powdered alum, equal in quantity to each of the above. Upon all of these is to be superposed a paste made of alum, white saindhava, and purified mercury, rubbed with the juice of kanya. The arrangement is to be repeated in filling in the second half of the pot (*i. e.*, saindhava, red brick powder, white saindhava, alum, and last of all, a paste made of alum, saindhava, and mercury). At the top of all these layers is to be placed broken pieces of earthen pots in order to stop the escape of surplus mercury out of the pot, which is then to be closely covered with a strong earthen basin, the joint being carefully cemented, and the pot being kept on fire for 3 days.

*N. B.* It is usual with the expert chemists to make use, in this case, of bhallataka, one fourth in quantity of mercury, although it is not mentioned in the original text.

(च) षष्ठोविधिः (रससिन्दूरम्)।

भागो रसस्य त्रय एव भागा गन्धस्य माषः पवनाशनस्य। संमर्द्य गाढ़ं सकलं सुखल्ले तां कज्ज्वलीं काचघटे निदध्यात्। संरुध्य मृत्कर्पटकैर्घटीं तां मुखे सचूर्णां खटिकाञ्च दत्त्वा। क्रमाग्निना त्रीणि दिनानि पक्त्वा तां वालुकायन्त्रगतां ततः स्यात्॥ वन्धूकपुष्पारुणमीशजस्य चूर्णं प्रयोज्यं सकलामयेषु। निजानुपानैर्मरणं जराञ्च हन्त्यस्य वल्लक्रमसेवनेन॥

*(f) Sixth process (Rasasinduram or red compound of mercury).*

One part of mercury, three parts of sulphur, and one eighth part of lead (reduced to ashes)—all of these are to be rubbed steadily in a good mortar, and the black mixture, thus prepared, is to be put inside a glass flask, the mouth of which is to be closed by means of a piece of chalk and lime. The flask is then to be well plastered with rags mixed with mud. It is next to be heated by means of a Baluka Jantram for 3 days by fire gradually increasing. The red compound of mercury thus prepared can be used with suitable *anupanam* (accompaniment) in all sorts of diseases. It prevents premature old age and death. Dose 3 ratis a day.

